॥ ४ ॥ तत्रोद्भूतोमतिमान्वाधूल[1]सगोत्रवारिधेश्चन्द्रः तैलंगह्लनाटोज्ञातिर्विद्वत्सभारत्नम् ॥ ५ ॥ यःपंचनद्युपाह्वयगोपीनाथांगतोघनश्यामः ॥ गोवर्द्धनाभिधोहंतत्सूनुस्तन्मुखाधिगतविद्यः ॥ ६ ॥ गर्भेगोस्वामिश्रीव्रजवल्लभतनुजयापतिव्रतया ॥ लाडोनाम्न्यास्मिधूतोगट्टूलालापराभिख्यः ॥ ७ ॥ मयाऽर्पितादुः[2]समयाभ्रजालं निरस्यदूरेबहुधान्य[3]कालं ॥ ला[4]भंजनेसाधयितुंविशेषात्प्राभंजनेमारुतशक्तिरेषा ॥ ८ ॥ वसुरामनंद[5]चंदिरमितवर्षेविक्रमार्कशकगेऽसा । मार्ग[6]कृष्ण नवम्यांसगुराश्रीविठ्ठलोत्सवेपूर्णा ॥ १ ॥ विस्तारोमेघानां विहितासारप्रपातदृग्घातः ॥ विहतो मारुतशक्त्याजवाद्वा[9]रणविधारणया ॥ २० ॥ अभ्रा[10]ऽन्तोदितमार्त्तण्डप्रकाशात्तमः[11] शमम् । इतः[12]परं चिरंरम्यं[13]सुदिनंमेप्रसेत्स्यति ॥ ११ ॥ सदा[14]ऽलोचनरोचिष्णु सौ[15]रव्यापारकारकम् । अवश्यंसुदिनंदृश्यचंडमार्त्तण्ड[16]मंडनम् ॥ ११ ॥ वेदानुयायिविदुषः पर[17]भक्तिनिष्ठान् विज्ञापयामिचरणौपरिगृह्यनम्रः । उद्यद्दयागुणदृशोन्यपरिश्रमज्ञाअत्रप्रमादशतकानिममक्षमध्वम् ॥ १२ ॥ अन्धोस्म्यहंनिजकरेणनलेखशक्तस्तल्लेखितंनिखिलमेवकरैःपरेषां ॥ भ्रान्त्यादयोजगतिमानुषबुद्धिधर्माः सर्वांशतोनपरिहर्तुमिमेचशक्याः ॥ १३ ॥ सदा[18]लिवल्लभश्रीमन्मु[19]कुन्दचरणेर्पितः ॥ सामोदा[20]रोचिताकारोवा[21]क्पुष्पाञ्जलिरुवलः ॥ इतिश्रीमद्वेदव्यासविष्णुस्वामिमतपुण्डरीकमंडलनमार्त्तण्डश्रीमद्वल्लभाचार्यचरणाब्जचंचरीकचित्तेनमोक्षगुरुगोस्वामिश्रीव्रजवल्लभचरणानुचरेणतैलंगज्ञातीयविद्वद्वलपंचनद्युपनामकघनश्यामभट्टात्मजेन वेदान्तचिन्तामण्याद्यनेकशास्त्रग्रंथनिर्माणरुक्मिणीचंप्वादिविविधकाव्यप्रबंधविधायिनागोवर्द्धनाऽऽशुकविनाविरचिताप्राभंजनपूर्वभागस्यमारुतशक्तिनाम्नीटीकासमाप्तिमगमत् ॥

समाप्तः

---

१ भार्गवांतःपातिवाधूलसगोत्रं २ दुःसमयोविरुद्धसिद्धान्तःवृष्ट्यनुपयोगीकालश्च ३ बहुभिःप्रकारैरन्येषांनाशकंपक्षेबहूनांधान्यानांनाशकं । ४ शुद्धज्ञानस्य पक्षेधान्यादेः । ५ ( १९ ३८ ) ६ संवत्सरे अमांतगणनयामार्गशीर्षे पूर्णिमांतगणनयापौषे ७ पक्षेमेघाअनामिति च्छेदः । वस्तुतस्तुमेघविस्तारोनामसहस्राक्षपूर्वभागः । ८ विहितःकृतो विगतहितोवानिःसारः सन्मार्गात्पातो ज्ञानघातश्चयतइतिपक्षेआसारो धारासंपातः प्रपातः पंकादिमूलकः अंधकारान्नेत्रोपरोधश्चयतइति । ९ अप्रतिबद्धोविचारो धारणाचयस्यां पक्षेविशेषेण चारोगतिः धारणं वहनं । १० अभ्रान्तैर्भ्रमरहितैरुक्तौशुद्धाद्वैतमार्त्तंडतत्प्रकाशाख्यौ ग्रंथविशेषौपक्षेअभ्राणामंतेनाशेसूर्यउदेति । ११ अज्ञानंअंधकारश्च १२ मारुतशक्त्यामेघविस्तारस्यनाशोत्तरं । १३ एतन्नामकंशुद्धाद्वैतमार्त्तण्डटिप्पणंपक्षेप्रकाशोज्वलदिनंच १४ सद्वस्तुनआलोचनकरंपक्षेनिरंतरंनेत्ररम्यं १५ भगवत्सेवादिःसारभूतोव्यापारःपक्षे दृढोत्तमव्यापारस्तत्प्रवर्त्तकंसारोगतिश्चव्यापारश्चतयोः १६ ग्रंथः सूर्यश्च १७ परस्यपुरुषोत्तमस्यभक्तिः फलरूपावाभक्तिः १८ सतामालेःपंक्तेः पक्षेसदाअलीनांभ्रमराणांप्रियः १९ स्वगुरुदत्तःश्रीप्रभुचरणसामयिकः स्वगृहेविराजमानः श्रीमद्बालमुकुन्दाख्योभगवत्स्वरूपविशेषः । २० सामसुयोग्यवचनेषूदारउचिताकारश्चपक्षेआमोदेनसुगंधेनसहितः समस्ताद्रोचितआकारोस्य । २१ अयंचरणः प्रथमस्कंधसुबोधिनीसमाप्तिस्थः श्रीमदाचार्योच्छिष्टोभक्त्यासंगृहीतः ॥

